श्रीदक्षिणामूर्तिसंस्कृतग्रन्थमाला – २

तद्व्याख्या च

माधुरी

महामण्डलेश्वरश्रीमहेशानन्दगिरिस्वामिविरचिता

श्रीदक्षिणामूर्तिसंस्कृतग्रन्थमाला-२

श्रीमत्सुरेश्वराचार्य विरचितः

# मानसोल्लासः

तद्व्याख्या च

## माधुरी

महामण्डलेश्वरश्रीमहेशानन्दगिरिस्वामिविरचिता

प्रकाशक :

श्रीदक्षिणामूर्तिमठः

ॐ

# श्रीदक्षिणामूर्तिस्तोत्रे तत्त्वसुधाव्याख्या

विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतं
पश्यन्नात्मनि मायया बहिरिवोद्भूतं यथा निद्रया।
यःसाक्षात्कुरुते प्रबोधसमये स्वात्मानमेवाद्वयं
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥१॥

अत्रेयं 'तत्त्वसुधा'।

मौनव्याख्याप्रकटितपरब्रह्मतत्त्वं युवानम्
वर्षिष्ठान्तेवसदृषिगणै रावृतं ब्रह्मनिष्ठैः।
आचार्येन्द्रं करकलितचिन्मुद्रमानन्दमूर्तिम्
स्वात्मारामं मुदितवदनं दक्षिणामूर्तिमीडे ॥१॥

कैवल्यानन्दयोगीन्द्रशुद्धानन्दयतीश्वरौ।
नत्वाऽऽरभे लघुव्याख्यां दक्षिणाशामुखस्तुतेः ॥२॥

इह खलु सर्वज्ञो भगवान् भाष्यकारः लोकानुग्रहैकप्रयोजनकृतशरीरपरिग्रहः सकलवेदान्तदुग्धाब्धेः न्यायमन्दरेण विचारनिर्मन्थनाद् आविर्भूताऽद्वैतामृतस्य विन्यासकलशभूतं श्रीदक्षिणामूर्तिस्तोत्रं सकललोकानुजिघृक्षया भोक्तृजीव-भोग्यजगद्-भोगप्रदपरमेश्वर-मोक्षप्रदगुरूणां अत्यन्ताऽभेदबोधकं सकृत् पाठश्रवणार्थमननादिमात्रेण परमपुरुषार्थप्रापकमारभमाणः, तस्य वेदान्तसारभूतनवनीतपिण्डात्मकत्वेन तदीय विषयादिभिरेव तद्वत्तासिद्धिमभिप्रेत्य, आदौ प्रतीचः सकलजगदधिष्ठानत्वेन परमेश्वरतां दर्शयन् दक्षिणाशामुखं परमेश्वरं मनसा पूजयति—विश्वमिति। विश्वं विविधप्रत्ययगम्यं

वियदादि सर्वमिदं जगत् । निजान्तर्गतं[1] निजं स्वीयं, अन्तः मध्यं, गतं प्राप्तं, प्रत्यक्स्वरूपे स्थितमिति यावत् । निर्विकारे नीरन्ध्रेऽतिस्वच्छेऽसङ्गे सूक्ष्मे प्रतीचि, जगतः तद्विपरीतस्य स्थितौ तत्सदृशं दृष्टान्तमाह—दर्पणदृश्यमान-नगरीतुल्यमिति । दर्पणे आदर्शे, नीरन्ध्रेऽसङ्गे स्वच्छे सूक्ष्मे निर्विकारे; प्रति-बिम्बिता सती दृश्यमाना अवलोक्यमाना; या नगरी पुरी, चतुर्दशसन्निवेशा सप्तवापीयुक्ता नानोपवना दक्षिणोत्तरतोऽतिमनोहरमार्गद्वयविभूषिता मङ्गल-दीपिकाद्वयविराजिता अनेकक्रीडाशिखरियुता नानाविधजनसंकुला क्वचिद् घट्टमार्गप्रदेशयुता च; तत्तुल्यं तत्समानम् । तदुक्तं भारतीतीर्थैः, 'निश्छिद्र-दर्पणे भाति वस्तुगर्भं बृहज्जगत् । सच्चित्सुखे तथा नानाजगद्गर्भमिदं वियद् ॥' इति (पंचदशी १३.१०१) । वासिष्ठेऽपि शिलोपाख्याने इदमुक्तम्, 'द्यौःक्ष्मा वायुरथाकाशः पर्वताः सरितो दिशः । सन्ति तस्यां शिला सा च सुषिरा न मनागपि ॥ अप्यत्यन्तघनाङ्गायाः सुनीरन्ध्राकृतेरपि । विद्यतेऽन्तर्जगद्वृन्दं व्योम्नीव विततोऽनिलः ॥ इति' (निर्वाण० ४६) ।

ननु प्रतीचोऽन्तरे यदि सदा विश्वं तिष्ठति, तर्हि रागादिवदन्तरेवानु-भूयेत ? इत्याशंक्याह—आत्मनीत्यादिना । आत्मनि स्वप्रकाशे प्रतीचि विषये आश्रये च; या माया अविद्या सूर्ये पेचकादीनां अन्धकारप्रतीतिवत् मामहं न जानामीति प्रमानुभवसिद्धा, तया मायया, बहिः स्वस्माद् बाह्यदेशे: उद्भूतमिव[2] आविर्भूतमिव; पश्यन् अवलोकयन् । अस्य 'यः' इत्युत्तरत्र सम्बन्धः । अन्तर्विद्यमानस्य जगतो बाह्यत्वेन अनुभवे दृष्टान्तमाह—यथा निद्रयेति । यथा निद्रया स्वप्नं जगत् साक्षिणि स्वस्मिन् अध्यस्ततया स्थितमपि स्वस्माद् बहिः स्थितं इव अनुभवति, तद्वदेवेदं जाग्रत्प्रपंचमपि स्वस्मिन् प्रत्यक्चैतन्ये

---

१. 'निजमिति असाधारणं स्वप्रकाशसदात्मकं स्वरूपमुच्यते ।'
—(रामतीर्थः)

२. 'इव शब्दो विद्वद्दृष्ट्या प्रयुक्तो न तु प्रतीत्यभिप्रायेण' (रामतीर्थः) ।

अध्यस्ततया स्थितमेव स्वाध्यस्तदेहादितादात्म्याऽध्यासवशात् स्वस्माद् बहिरिव पश्यति । अन्यथा जडस्य जगतः प्रत्यक्चैतन्येन सह संयोगाद्यन्यतम-सम्बन्धाऽसम्भवेन प्रतीचः सकाशात् जाग्रद्भानं न स्यात् । तस्मात् तत्र अध्यस्तमेव तत् । तथा च प्रत्यगात्मानं प्रकृत्य श्रुति र्भवति, 'पुरत्रये क्रीडति यश्च जीवः ततस्तु जातं सकलं विचित्रम । आधारमानन्दमखण्डबोधं यस्मिन् लयं याति पुरत्रयं च ।। एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ।। मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् । मयि सर्वं लयं याति तद् ब्रह्माद्वयमस्म्यहम् ।।' इति (कैवल्य० १४, १५, १९) । 'यथा स्वप्नप्रपंचोयं मयि मायाविजृम्भितः । एवं जाग्रत्प्रपंचश्च मयि मायाविजृम्भितः ।।' इति पुराणवचनं च ( ) । ततः, प्रतीच्येव जाग्रत्प्रपंचोऽध्यस्तोऽनुभूयते भ्रान्त्या बहिरिवेति भावः ।

ननु स्वात्मनि प्रपंचोऽध्यस्तश्चेद्, बाध्येत; न च कदाचिदपि बाधोऽनुभूयते; अतो नात्मनि अध्यस्तः, किन्तु बहिः परमार्थत एव स विद्यते ? इत्याशंक्य, यथा स्वप्नप्रपंचोऽध्यस्तोऽपि तदा सत्य इवैव भाति, प्रबोधसमये तु बाध्यते, तथैव अयमपि जाग्रत्प्रपंचः तत्त्वज्ञानात्पूर्वं सत्यत्वेन भातोपि, आचार्येण परमदयालुना साक्षात्परमेश्वरावताररूपेण उपदिष्टतत्त्वमस्यादि-महावाक्यजन्यप्रत्यग्ब्रह्मैक्यसाक्षात्कारसमये समूलं बाधितः सन् प्रत्यगभिन्ना-द्वितीयब्रह्ममात्रतया परिशिष्यते; इत्यभिप्रेत्याह—यः साक्षादित्यादिना । यः अध्यस्तप्रपंचाधिष्ठानभूतः प्रत्यगात्मा । प्रबोधसमये गुरूपदिष्टमहावाक्यात् ज्ञानोत्पत्तिकाले । अद्वयं सर्वप्रपंचस्य समूलस्य बाधितत्वेन वियदादिद्वयरहितं । स्वात्मानमेव वियदाद्यधिष्ठानभूतब्रह्माभिन्नं सच्चिदानन्दात्मकं प्रत्यञ्चमेव । साक्षात्कुरुते सच्चिदानन्दात्मकं ब्रह्महमास्मीत्यप्रतिबन्धेन अव्यवधान मनु-भवति इत्यर्थः । 'यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्' इत्यादिश्रुतिः (बृ० २.४.१४) । तस्मै उक्तरूपाया श्रीगुरुमूर्तये[1]; श्रीगुरुः साक्षात्कृत-

---

[1] 'अनेन स्वोपदेष्टगुर्वात्मना चास्य ध्येयत्वं विवक्षितम्' । —(रामतीर्थः)

ब्रह्मतत्त्वतया त्रिविधपरिच्छेदशून्यो ज्ञानोपदेष्टा पुरुषः; तन्मूर्तये तद्रूपेण अवस्थिताय श्रीदक्षिणामूर्तये दक्षिणा दक्षिणदिगभिमुखा मूर्ति विग्रहो यस्य, तस्मै । 'परमाऽद्वैतविज्ञानं कृपया वै ददाति यः । सोऽयं गुरुर्गुरुः साक्षाच्छिव एव न संशयः ॥' (वासिष्ठ) इत्यादिवचनशतेभ्यो ज्ञानोपदेष्टा गुरुः साक्षात्परमेश्वर एव ।

अथवा श्रीमती सच्चिदानन्दात्मिका गुर्वी अतिमहत्तरा मूर्तिः स्वरूपं यस्य स तथा, तस्मै श्रीगुरुमूर्तये । श्रिया अनाद्यचिन्त्यमायया शक्त्या, दक्षिणः सृष्टिस्थित्यन्तविरचनानिपुणश्चासौ परमार्थतः अमूर्तिश्च आकार-विशेषरहितः, 'अस्थूलमनणु' इत्यादिश्रुतेः (बृ॰ ३.८.८), स दक्षिणामूर्तिः । तस्मै इदं नमः प्रह्वीभावः । 'अस्तु' इति शेषः । प्रह्वीभावश्च स्वात्मनः परमेश्वरे एकत्वेन समर्पणम् ।

अत्र च पूर्वार्धेन त्वंपदार्थ उक्तः । उत्तरार्धे श्रीगुरुमूर्तये श्रीदक्षिणामूर्तये इति पदद्वयेन मूर्तिद्वययुक्तः तत्पदार्थ उक्तः । स्वात्मानमद्वयमिति पदद्वय-सामानाधिकरण्येन, यत्तच्छब्दाभ्यां च प्रत्यग्ब्रह्मैक्यलक्षणो वाक्यार्थ उक्तः । सकलवेदान्तप्रसिद्धोयमेवार्थः उत्तरश्लोकैः प्रपंच्यते ।

दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतं विश्वं यथा निद्रया तथा आत्मनि मायया बहिरुद्भूतमिव पश्यन्[1] यः प्रबोधसमयेऽद्वयं स्वात्मानमेव साक्षात्कुरुते तस्मै इदं नमः—इत्यन्वयः ।

एवमेवास्यार्थो वार्तिककारेण च संगृह्योक्तः, 'ईश्वरो गुरुरात्मेति मूर्ति-भेदाद्विभागिने । व्योमवद्व्याप्तदेहाय दक्षिणामूर्तये नमः ॥' इति (मा. १.३०) इति ॥ १ ॥

---

१. 'शतृनिर्देशो न लक्षणार्थः, नापि हेत्वर्थः, किन्तु तिष्ठन् गायतीतिवत् क्रियाद्वयनैरन्तर्यद्योतनार्थः । यद्वा, लक्षणार्थोयं शता । पूर्वं यः स्वसम्बन्धि-विश्वदर्शनेन सद्वयः संसारीव लक्षितः स एव प्रबोधसमये विद्याबाधित-विश्वः स्वात्मानमेवाद्वयं साक्षात्कुरुत इत्यर्थ इति द्रष्टव्यम्' ।

—(रामतीर्थः)

बीजस्यान्तरिवाङ्कुरो जगदिदं प्राङ्निर्विकल्पं पुन-
र्मायाकल्पितदेशकालकलनावैचित्र्यचित्रीकृतम् ।
मायावीव विजृम्भयत्यपि महायोगीव यः स्वेच्छया
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥२॥

अत्रेयं 'तत्त्वसुधा'।

ननु आत्मनि प्रपंचस्य अवस्थानं नोपपद्यते, तदकारणत्वात्। तथा हि; किमात्मा जगदारम्भकः? उत तदाकारपरिणामी? नाद्यः, एकस्य विभोः चिद्रूपस्य जडप्रपंचारम्भकत्त्वाऽसम्भवात्। नापि द्वितीयः, निरवयवनिर्विकार चिद्रूपस्य परिणामासम्भवात्। ततः, नित्याः चतुर्विधाः परमाणवः जगदारम्भकाः इति तेषु एव तस्य स्थितिः।

यद्वा, प्रधानमेव जडं त्रिगुणात्मकं जगदाकारपरिणामि। तत्रैवेदं जगत् परमार्थतोऽस्ति, न तु चिदात्मनि, इति नैयायिकानां सांख्यानां वा मतमाशंक्य; न तावत् परमाण्वारम्भवाद उपपद्यते, निरवयवानां तेषां सर्वात्मना संयोगे प्रथिमाऽनुपपत्तेः, भिन्नयोर्गवाश्ववत् कार्यकारणभावायोगात्, पूर्वमसतश्च कार्यस्य शशविषाणवत् उत्पत्त्यनुपपत्तेः, अत्यन्तभिन्नकार्यारम्भे कार्ये गुरुत्वादितद्वैगुण्यापत्तेः [गुरुत्वादिद्वैगुण्यापत्तेः], परमाणुसद्भावे प्रमाणाभावात्, कार्यद्रव्यस्य स्वन्यूनपरिमाणाऽऽरब्धत्त्वनियमस्य स्थूलतूलपिण्डारब्धतन्त्वादौ अदर्शनात् च;

नापि प्रधानपरिणामवादः, तस्य चेतनाऽनधिष्ठितस्य कार्योत्पादे स्वतोऽसामर्थ्यात्, लोके रथादेः चेतनाधिष्ठितस्यैव प्रवृत्तिदर्शनात्, तत्सद्भावे प्रमाणाभावात्, 'अजाम' इत्यादि श्रुतेश्च (श्वे० ४.५) तेजोबन्नादिप्रकृत्यव्याकृतपरत्वाच्च।

किन्तु श्रुतौ 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. उ. २.१), 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' (तै. उ. २.१), 'सदेव सोम्येदमग्र आसीत्' (छा. ६.२), 'तदैक्षत बहु स्यां प्रजायेये'ति (छा. ६.२), 'यतो वा इमानि भूतानि जायन्ते' (तै. उ. ३.१), 'यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः तस्माद् एतद् ब्रह्म नामरूपमन्नं च जायते' (मु॰ १.१.९) इत्यादिषु [इत्यादिकायां] सहस्रशः परमात्मन एव चेतनात् जगदुत्पत्तिश्रवणात्, विलक्षणयोरपि कार्यकारणभावस्य गोमयवृश्चिकपुरुषकेशलोमादौ दर्शनात् अत्र विवर्तवादस्यैव विवक्षितत्वात्, 'सर्वं तं परादात् योऽन्यत्र आत्मनः सर्वं वेद' (बृ. २.४.६) इत्यादिश्रुतौ आत्मनोऽन्यत्र जगद्वेदनस्य निन्दितत्वात्, घटोस्ति पटोस्ति घटः स्फुरति पटः स्फुरति इति सत्तास्फुरणानुविद्धतया अनुभूयमानस्य जगतः मृदनुविद्धघटस्य मृत्कार्यत्ववत् सत्तास्फुरणात्मकार्यत्वस्यैव युक्तत्वाच्च आत्मैव जगदुत्पत्त्यादिकारणम्:; इत्यभिप्रेत्याह — बीजस्यान्तरिवेति। इदम् अनुभूयमानं सर्वं जगत्। प्राक्[1] उत्पत्तः पूर्वम्। निर्विकल्पं[2] भोक्तृ-भोग्यादिविकल्परहितं आत्ममात्रं एव आसीत्। आत्मा वा इदमेकं एवाग्र आसीत्' (ऐ॰ १.१.१), 'सदेव सोम्येदमग्र आसीत्' (छा॰ ६: २)) इत्यादि श्रुतेः। तत्र दृष्टान्तमाह—बीजस्येति[3]। बीजस्य अन्तः मध्येऽङ्कुर इव। उपलक्षण-

---

१. 'ननु कालस्यापि मायाकल्पितत्वे प्रागिति च पुनरिति च कथं निर्देश इति चेत्? नैष दोषः, परप्रत्यायनार्थतया यथाव्यवहारं प्राप्तानुवाद-मात्रत्वात्' (रा॰ती॰)।

२. 'जातिगुणक्रियादिविकल्परहितम्। सन्मात्रमासीदिति शेषः' (रा॰ती॰)।

३. 'बीजावयवानामेव बीजसंस्थान परित्यागेनांकुरात्मतापत्तिरित्यस्माभि-रंगी क्रियते' (रा॰ती॰)।

मेतत्, पल्लव पत्रपुष्पफलशाखाविटपात्मकवृक्षो यथा उत्पत्तेः पूर्वं निर्विकल्पं बीजमात्रमासीत् तद्वत् । पुनः पश्चात् सृष्टिसमये । मायाकल्पितदेशकाल-कलनावैचित्र्यचित्रीकृतम्—मायया ईश्वराधिष्ठितया कल्पितौ यौ देशकालौ तयोश्च कलना सम्बन्धः तद्वैचित्र्येण चित्रीकृतं नानाविधभेदभिन्नतया विभक्तम् । 'तन्नामरूपाभ्यामेव व्याक्रियत' इति श्रुतेः (बृ० १.४.७) ।

ननु कथमीश्वरस्य अद्वितीयस्य बाह्यसाधनरहितस्य जगदुत्पादकत्वम्? लोके कुलालादेः बाह्यसाधनवत एव कार्यकरत्वदर्शनात्, इत्याशंक्य; ईश्वरस्य अनाद्यनिर्वचनीयमायाशक्त्युपहितस्य स्वेच्छामात्रेणैव ऐन्द्रजालिकवत् देवर्षि-पित्रादियोगिवच्च उपपद्यते जगदुत्पादकत्वम्, इत्यभिप्रेत्याह—मायावीवेत्या-दिना । यः परमेश्वरः मायावीव लोकप्रसिद्धैन्द्रजालिकमायाविवत् । महा-योगीव[1] विश्वामित्रादिमहायोगिवच्च । स्वेच्छया स्वसंकल्पमात्रेण । विजृम्भयति इदं जगत् उत्पादयति । 'इन्द्रो मायाभिः पुरुरूप ईयते' (बृ० २.५.१९), 'तदात्मानं स्वयमकुरुत' (तै० २.७), 'सच्च त्यच्चाभवत्' (तै० २.६) इति श्रुतेः ।

नापि मायया तस्य सद्वितीयत्वं, तस्या अपि कल्पितत्वात् । नापि तस्य कारणत्वेन विकारित्वं, जगत्कारणत्वस्यानाद्यनिर्वचनीयमायाघटिततया कल्पितत्वेन उपलक्षणत्वेनापि[2] तत्र विकाराऽनापादकत्वात् । ततश्च तत्र कस्यापि दोषस्याभावात् ब्रह्मैव प्रत्यगभिन्नं सकलजगदुत्पत्तिस्थितिलय हेतुरिति भावः । तस्मै नमः[3] ॥२॥

---

१. 'अपिः दृष्टान्तयोर्मिथः समुच्चयार्थः (रा० ती०) ।

२. विशेष्यवृत्तिधर्मानाश्रयत्वे सति परंपरया व्यावर्तकमुपलक्षणम् । स्वरूपा-नन्तर्निविष्टत्वे यावत्कार्यमनवस्थायित्वे च भेदहेतुः इत्यर्थः ।

३. 'जगदिदं स्वान्तर्गतं यो विजृम्भयति तस्मै नमः इत्यन्वयः' (रा०ती०) ।

यस्यैव स्फुरणं सदात्मकमसत्कल्पार्थकं भासते
साक्षात्तत्त्वमसीतिवेदवचसा यो बोधयत्याश्रितान् ।
यत्साक्षात्करणाद्भवेन्न पुनरावृत्तिर्भवाम्भोनिधौ
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥३॥

अत्रेयं 'तत्त्वसुधा' ।

ननु असदेव जगतः कारणं, पिण्डादिनाशादेव घटाद्युत्पत्तिदर्शनात्, जागराद्यकालीनकार्यस्य च असत्पूर्वकत्वदर्शनात्, तद्दृष्टान्तेन जगतोपि तथात्वानुमानात्, 'असद्वा इदमग्र आसीत्' इति श्रुतेश्च (तै० उ० २.७), इत्यसद्वादमाशंक्याह—यस्यैवेति । यस्य प्रत्यगभिन्नस्य परमेश्वरस्य स्वरूपभूतं सदात्मकं सद्रूपं स्फुरणमेव चैतन्यमेव । असत्कल्पार्थगम्[1] असत्कल्पाः असत्तुल्याः स्वसत्तारहिताः अनिर्वचनीयाः ये अर्थाः वियदाद्याः तान् गच्छतीत्यसत्कल्पार्थगम्, अनिर्वचनीयवियदादिपदार्थनिष्ठमिति यावत् । भासते प्रकाशते ।

अयं भावः । जगतः असत्कारणत्त्वे घटोऽसन् इति असत एव सर्वत्र अनुवृत्तिः स्यात्, न तु सतः । किं च तस्यासतः अस्वप्रकाशत्वेन तत्र वर्तमान जगतः आन्ध्यमपि स्यात् । जगच्च सदनुविद्धं प्रकाशते । तथा च स्वतः सत्वप्रकाशरहितं जगत् तदधिष्ठानभूतात्मसत्ताप्रकाशाभ्यामेव सत्ताप्रकाशवद्भवतीति तत्राध्यस्तत्त्वेन तत्कारणकमेव जगत् । नापि पिण्डादिनाशस्य घटादिकारणत्वं, अनुगतमृदादेरेव कारणत्वात् । जागराद्यकालीनस्य कार्यस्य च असत्पूर्वकत्वं नास्मत्सम्मतम्, सुषुप्तिकालीनसद्रूपात्मनः कारणत्वांगीकारात्, सुषुप्तावात्मसत्त्वस्य च साधयिष्यमाणत्वात् । 'असद्वा इदमग्र आसीद्' इति श्रुतिश्च अनभिव्यक्तसत्कारणपरा, 'कथमसतः सज्जायेत' इति श्रुत्यैव (छा० ६.२.२) असद्वादस्य प्रतिषेधात् इति ।

---

१. रामतीर्थीये तु अर्थकमित्येव पाठः ।

अथवा, ननु घटः सन् पटः सन् इत्येव प्रतीयमानस्य जगतः कथमसत्कल्पत्वं अध्यस्तत्वेन उच्यते ? इत्याशंक्याह्—यस्यैवेत्यादिना। सत्प्रकाशाधिष्ठाना-त्मसत्तैव आरोपित जगन्निष्ठतया प्रतीयते, न तु तस्य स्वतः सत्त्वम्। 'अथात आदेशो नेति नेति' (बृ० २.३.६), 'नेह नानास्ति किंचन' (बृ० ४.४.२०) इत्यादि श्रुत्या प्रपंचस्य प्रतिषेधात्। भ्रान्त्यापि तत्प्रतीत्युपपत्तेश्च। तस्य असद्विलक्षणत्वांगीकारात् न शशविषाणसमत्त्वम्। ततश्च अपरोक्ष प्रतीति-रप्युपपद्यते, इति तात्पर्यार्थः। अक्षरार्थस्तुः पूर्ववत्।

येयं असत्ये प्रपंचे सत्यत्वबुद्धिः, अनात्मनि देहादौ च आत्मत्वबुद्धिः, इयमेव सकलसंसारनिदानम्। अस्याश्च निवृत्तिः गुरुपदिष्टतत्त्वमस्यादि-वाक्यजन्याऽपरोक्षज्ञानेन मूलाऽज्ञाननिवृत्त्यैव, इत्यभिप्रायेण आह— साक्षादित्यादिना। यः गुरुरूपः परमेश्वरः। आश्रितान् विधिवदुपसन्नान्। तत्त्वमसीतिवेदवचसा यज्जगत्कारणं सद् अद्वितीयं ब्रह्म तत् त्वं असि, न ततो भिन्नोऽसि इति वेदवचसा वेदवाक्येन। साक्षात् अपरोक्षत्वेन। तत्त्वं बोधयति ज्ञापयतीत्यर्थः।

ननु कथं किंचिज्ज्ञत्वसर्वज्ञत्वादि विरुद्धधर्मकयोः जीवेश्वरयोः अभेदं अयोग्यं वेदो बोधयति इति चेत् ? उच्यते। सोऽयं देवदत्त इत्यादि वाक्यं तदेतद्देशादिविरुद्धांशं त्यक्त्वा अविरुद्धांशं पिण्डमात्रं आदाय भागत्यागलक्षणया यथाऽभेदं बोधयति, तथा तत्त्वमस्यादिवाक्यमपि जीवेश्वरयोः मायाऽन्तः-करणोपाधि तन्निमित्तकिंचिज्ज्ञत्वसर्वज्ञत्वादिविरुद्धांशं त्यक्त्वा, उभयत्रा-नुगताविरुद्धचिन्मात्राऽऽदानेन अभेदं बोधयति।[1] अत्र महावाक्यार्थविषये या

---

१. एकपदार्थेनापरपदार्थस्य सम्बन्धः संसर्गमर्यादया भासतां नाम, परमत्र पदार्थयोरभेदान्न सम्बन्धबोधः किन्तु घटःकलश इत्यादिकोषवाक्य-वद्बोधः। संबन्धश्च भिन्नयोरेवेति नाभेदः सम्बन्धस्तादात्म्यमपि भिन्न-योरेव। वाक्याच्च सर्वपरिच्छेदकरूपविशेषणशून्यः 'अहम्' इत्येव बोध इति दिक्।

या अनुपपत्तयः परैरुद्भाविताः ताः सर्वाः सर्वैराचार्यैः सर्वत्र पराक्रम्य निरस्ता इति नास्माभिस्तत्र यत्यते, संग्रहव्याख्याने प्रवृत्तत्वात्।

ननु एवं वाक्यजन्यज्ञानान्निवृत्तोपि संसारः सुषुप्तिप्रलययोरिव पुनरपि कदाचिदुद्भवेद्? इत्याशंक्याह—यत्साक्षादित्यादिना। यत्साक्षात्करणात् यस्य स्वप्रकाशनिष्प्रपंच सच्चिदानन्दस्वरूपस्य ब्रह्मणः, साक्षात्करणात् अपरोक्षतया सोहमस्मीति ज्ञानात्। भवाम्भोनिधौ संसारसमुद्रे। पुनः भूयः। आवृत्तिः आवर्तनं आगमनम्। न भवेत् न स्यात्। 'तरति शोकमात्मवित्' (छा० ७.१.३), 'ब्रह्मवेद ब्रह्मैव भवति' (मु. ३.२.९), 'न स पुनरावर्तते' (छा० ८.१५.१) इत्यादिश्रुतिशतेभ्यः। सुषुप्तिप्रलययोः मूलाज्ञानस्य विद्यमानत्वात् पुनरुत्थानं, तस्य वाक्यजन्यज्ञानेन अत्र नष्टत्वात् न मुक्तस्य पुनरुत्थानमिति भावः। तस्मै नम[1] इति ॥ ३ ॥

नानाछिद्रघटोदरस्थितमहादीपप्रभाभास्वरं
ज्ञानं यस्य तु चक्षुरादिकरणद्वारा बहिः स्पन्दते।
जानामीति तमेव भान्तमनुभात्येतत् समस्तं जगत्
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥४॥

अत्रेयं 'तत्त्वसुधा'।

न च, जगतः कथं आत्मसत्ताभानाभ्यां तद्वत्त्वम्, आत्मवत् स्वतः एव सत्ताप्रकाशौ जगतो भवेतां इति आशंक्यम्; आत्मवत् जगतः स्वतः सत्त्वे

---

१. 'विषयाणां चिदात्मव्यतिरेकेण स्वरूपानिरूपणात् चिदात्मनि मायाकल्पितान् विषयाकारान् दृग्दृश्यादिविवेकज्ञानेन अभिभूय स्वयमद्वयं प्रत्यस्तमितसमस्तविशेषाकारं आत्मानमनुभवन् तत्त्वमसीति वेदवचसा य आश्रितान् उपासकान् आत्मजिज्ञासून् साक्षाद् बोधयति तस्मै श्रीगुरुमूर्तये नम इत्यन्वयः' (रा० ती०)। यत्तदोर्नित्यसम्बन्धात् यस्य स्फुरणं भासते तस्मै नम इति योजनीयम्। मौनव्याख्यातृत्वेपि वेदार्थस्यैव बोधकत्वाद् वेदवचसेत्युक्तम्।

तद्वदेवोत्पत्तिविनाशानुपपत्तेः, तद्वदेव करणाद्यनपेक्षया सर्वदा भानप्रसंगात् च न स्वतः सत्ताप्रकाशौ भवतो जगतः, किन्तु आत्मसत्ताप्रकाशाभ्यामेव जगतोपि सत्ताप्रकाशौ ।

ननु एवं तर्हि सर्वस्य जगतः आत्मनि अध्यस्तत्वे भवन्मते कथं करणाद्यपेक्षा ? प्रकाशरूपात्मसम्बन्धादेव सर्वं सर्वदा किमिति न भायात् ? सर्वगतचैतन्यस्याऽविरोधित्वेन अज्ञानावृतत्वे वा कथं कादाचित्कं जगतो भानम् ? अज्ञानस्य चैतन्यातिरिक्तनिवर्तकाभावात्, तस्य च अविरोधित्वात्, इत्याशंक्याह—नानाच्छिद्रेति । नानाच्छिद्रघटोदरस्थितमहादीपप्रभाभास्वरम्—नानाच्छिद्रस्य अनेकरन्ध्रयुक्तस्य, घटस्य कुम्भस्य, उदरे अन्तः, स्थितो वर्तमानो, यो महादीपः, तस्य प्रभेव भास्वरं भासनशीलं, दीपवत तमोविरोधिलक्षणप्रकाशस्वभावं यस्य परमेश्वरस्य घटवदनेकाच्छिद्रयुक्ते देहेऽन्तःकरणे प्रतिबिम्बितस्य साक्षित्वेन अवस्थितस्य स्वरूपभूतं ज्ञानं चैतन्यं चक्षुरादिकरणद्वारा चक्षुःश्रोत्रादीनि यानि करणानि विषयोपलब्धिसाधनानि तद्द्वारा तच्छिद्रेण बहिः विषयदेशे स्पन्दते गच्छति । इन्द्रियाणां विषयसम्प्रयोगे तद्द्वारा चैतन्योपाध्यन्तःकरणे गच्छति सति तत्प्रतिबिम्बितं चैतन्यमपि गच्छति, गत्वा तं विषयं भासयतीत्यर्थः ।

अयमभिप्रायः । चैतन्यं तु स्वतो अज्ञानाऽविरोधि अपि अन्तःकरणे प्रतिबिम्बितं सत् तद्विरोधि । अत एव अन्तकरणधर्माः रागादयः स्वसत्तायां सर्वदा भासन्ते । घटपटादिविषयश्च बिम्बचैतन्ये ब्रह्मण्येव अध्यस्तस्तिष्ठति । अन्तःकरणेन चक्षुरादिद्वारा विषयदेशं गच्छता घटाद्यधिष्ठानबिम्बचैतन्यमुपाधीयते । तथा च एकोपाधिसंबन्धात् अन्तःकरणे प्रतिबिम्ब्य अवस्थितेन साक्षिचैतन्येन घटाद्यधिष्ठानचैतन्यमेकीभवति । ततः साक्षिचैतन्येन तदज्ञाने निवृत्ते घटादिविषयो भासते, न सर्वदा । अतोऽज्ञानावरणभंगार्थं चक्षुराद्यपेक्षेपि न कोपि दोषः ।

केचित्तु अचिद्रूपात्मनिष्ठज्ञानेन घटादिविषयो भासत इति वदन्ति। तन्न। आत्मनिष्ठज्ञानस्य जडस्य स्वप्रकाशस्य वा घटादिविषयेण संयोगादिसम्बन्धाभावात्, स्वरूपसम्बन्धस्य चातिप्रसक्तत्वात्।

केचित्तु विषयनिष्ठस्फुरणेन घटादिभानमिति कथयन्ति। तदपि न। विषयनिष्ठस्य आत्मना सह सम्बन्धाभावेन अहं जानामीति सम्बन्धप्रत्ययानुपपत्तेः।

तस्मादस्मदुक्तप्रकारेण स्वप्रकाशसाक्षिचैतन्यसम्बन्धादेव घटादिविषयभानमिति। तदेतदाह—जानामीत्यादिना। घटादिकमहं जानामीति घटादिविषयसम्बद्धतया भान्तं प्रकाशमानं तमेव साक्षित्वेनावस्थितं परमेश्वरमेव अनु पश्चात् एतत् विविधशब्द प्रत्ययगम्यं समस्तं सर्वं जगत् भाति प्रकाशते। अनुभानमपि न तस्य स्वतः किंतु अग्निं दहन्तं अयोनुदहतीतिवत् अध्यासादेवेत्यर्थः। तथा च श्रुतिः 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति (मुं० २.२.१०)। तस्मै नम इति ॥४॥

**देहं प्राणमपीन्द्रियाण्यपि चलां बुद्धिं च शून्यंविदुः**
**स्त्रीबालान्धजडोपमास्त्वहमिति भ्रांता भृशं वादिनः।**
**मायाशक्तिविलासकल्पितमहाव्यामोहसंहारिणे**
**तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥५॥**

अत्रेयं 'तत्त्वसुधा'।

अत्र केचित्, सर्वमेतदभित्तिचित्रं, देहव्यतिरिक्तस्यात्मन एवाभावात्। देहस्यैव गच्छामि, तिष्ठामि, स्थूलोहं कृशोहमित्यात्मत्वानुभवादिति वदन्ति।

अन्ये केचित् तान् हस्तेन वारयन्तः आहुः—जीवात्मनिर्गमे शरीरमरणस्य दर्शनात्, वच्मि पश्यामि शृणोमि इत्यादि बुद्धिदर्शनात् इन्द्रियाण्येवात्मेति।

ततोप्यन्ये केचित् ईषच्छुद्धबुद्धयः चक्षुरादीन्द्रियनाशेपि प्राणसत्त्वे जीवनदर्शनात्, अन्यथाऽदर्शनात्, बुभुक्षितोहं पिपासितोहं इत्यादि प्रतीतेश्च प्राण एवात्मेति भणन्ति।

इतरे तु प्राणस्य बाह्यवायुवज्जडत्वेन भोक्तृत्वाद्यसम्भवात् मन एव चेतनं भोक्तृ चात्मेति वदन्ति।

योगाचारस्तु मम मन इति भिन्नतया प्रतीयमानस्यात्मत्वासंभवात् क्षणिकविज्ञानमहमिति प्रतीयमानं बुद्धिशब्दापरपर्यायं संसारीति जल्पति।

तद्धिक्कृत्यान्यः कश्चिद् विद्युदभ्रनिमेषादिवत् क्षणिकस्य तस्य आत्मत्वानुपपत्तेः, सुषुप्तौ तस्याप्यभावात् अन्यस्यात्यनुपलब्धेः शून्यमेव आत्मेत्युद्गिरति।

एते च स्वस्वपक्षदार्ढ्याय इतस्ततश्च यां कांचित् श्रुतिमादाय उदाहरन्ति। अन्ये चैतदन्यथाऽऽत्मस्वरूपं फणन्ति। सर्वे ते दैवोपहतचित्ताः भ्रान्ताः सकलश्रुतिस्मृतीतिहासपुराणन्यायविद्वत्प्रत्यक्षविरुद्धार्थपरिग्राहकाः। नैतेषां मार्ग आत्मनः श्रेयोऽर्थिभिः स्वप्नेप्यनुसरणीयः, इत्यभिप्रेत्याह—देहं प्राणमपीति। देहं सशिरस्कं पिण्डम्। प्राणं पंचवृत्तिकं मुखनासिकसंचारिणम्। इन्द्रियाणि चक्षुरादीनि तत्तद्गोलकवृत्तीनि रूपादिग्राहकाणि। चलां क्षणिकां सन्ततोदयां बुद्धिं विज्ञानम्। शून्यं तुच्छम्। चकारात् तार्किकाद्यभिमतमात्मानम्। वादिनः चार्वाकादयः। स्त्रीबालान्धजडोपमाः स्त्रीबालान्धजडवद्विवेकविज्ञानरहिताः। अत एव भ्रान्ताः तत्त्वमन्यथा प्रतिपद्यमाना अहमिति विदुः आत्मत्वेन जानन्ति। अन्यानुपदिशन्ति चेत्यर्थः।

ननु एते वादिनः परीक्षिका अपि किमिति एवं नास्तिकाः सन्तः अन्यथा अन्यथा तत्त्वं प्रतिपद्यन्ते, इति चेत्? ईश्वरानुग्रहाभावात्। ये तु आस्तिकाः श्रुतिस्मृत्युक्तमार्गेण कर्मानुष्ठानेन भगवन्तं परमेश्वरं सेवन्ते तेषां परमेश्वरप्रसादात् नैतादृशो व्यामोहः इत्यभिप्रेयाह—मायेत्यादिना। मायाशक्तिविलासकल्पितमहाव्यामोहसंहारिणे—भगवतः परमेश्वरस्य अनाद्यनिर्वचनीया या मायाशक्तिः परव्यामोहिका, तस्या विलासेन एकदेशेन कल्पितो, यो महाव्यामोहः महान् अनन्तोऽपरिमाणश्च, व्यामोहः देहाद्यात्मत्वभ्रमः, तं संहर्तुं नाशयितुं शीलमस्येति स तथोक्तः। तस्मै नमः[1]। तथा चोक्तं

---

1. भ्रान्तावादिनो विदुः, तेषां मोहसंहारिणे तस्मै नम इति तेषामित्यध्याहृत्य योजना। एवं चात्मविचारे प्रवृत्तिमात्रेणेश्वरानुग्रहविषयतेत्युक्तमिति दिक्।

श्रीभागवते—"येषां स एव भगवान् दययेदनन्तः सर्वात्मनाश्रितपदो यदि निर्व्यलीकम्। ते दुस्तरामतितरन्ति च देवमायां नैषां ममाहमिति धीः श्वसृगालेभक्ष्ये।" (२.७.४२) ॥५॥

राहुग्रस्तदिवाकरेन्दुसदृशो मायासमाच्छादनात्
सन्मात्रः करणोपसंहरणतो योऽभूत् सुषुप्तः पुमान्।
प्रागस्वाप्समिति प्रबोधसमये यः प्रत्यभिज्ञायते
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥६॥

अत्रेयं 'तत्त्वसुधा'।

ननु शून्यवादिना सुषुप्तौ कस्याप्यनुपलम्भात् शून्य एवात्मेति यदुक्तं, तस्य किं समाधानम्? इत्याशंक्य, सुषुप्तावात्माऽस्तित्वं साधयन् समाधत्ते—राहुग्रस्तेति। यः पुमान्[1] प्रत्यग्रूपः परमेश्वरः। करणोपसंहरणतः विशेषविज्ञानहेतुचक्षुरादिकरणानामुपसंहारात्। सन्मात्रः पूर्णानन्दादिरूपेण स्फुटप्रकाशमानतया केवलं सन्मात्रेणावस्थितः सन्। सुषुप्तोऽभूत् सुप्तिं प्राप्तोऽभूत्। करणाभावेपि पूर्णानन्दभानवतो मुक्तात्मनः सकाशात् सुषुप्तात्मनो वैषम्यमाह—मायासमाच्छादनादिति। मायया आत्माऽविद्यया, समाच्छादनात् आवरणात्, सन्मात्र इति सम्बन्धः[2]। स्फुटमप्रकाशमानस्य स्वरूपतः सत्त्वे दृष्टान्तमाह—राहुग्रस्तेति। राहुग्रस्तदिवाकरेन्दुसदृशः—राहुणा सैंहिकेयेन, ग्रस्तौ गृहीतौ यौ दिवाकरेन्दू सूर्यचन्द्रौ, तत्सदृशः तत्समानः सन् सुषुप्तः अभूद इति सम्बन्धः। यथा राहुणा ग्रस्तो दिवाकरः चन्द्रो वा स्फुटं न प्रकाशते इत्येतावता दिवाकरस्य चन्द्रमसो वा नासत्वम्,

---

१. शरीर इत्यर्थः।

२. सन्मात्रो भूदिति सम्बन्धः। केनात्मना सुषुप्तो भवेदित्यपेक्षायामाह-सन्मात्रइति। स्वप्रकाशसत्तामात्रेत्यर्थः। यद्वा करणोपसंहरणतः सुषुप्तः सन्मात्रो यः पुमानभूदिति सम्बन्धः। अर्थः पूर्ववत्; एवं सन्मात्रोपि स्वेनज्योतिषा भासमानोपि तदानीं पूर्णप्रकाशात्मना न भासत इति' (रा०ती०)।

तद्वत् करणानामुपसंहारात् माययाऽऽवृतत्वाच्च सुषुप्तौ स्फुटमात्मा न भासते इत्येतावता आत्मनो नाऽसत्त्वमित्यर्थः ।

ननु राहुग्रस्तस्य सूर्यस्य चन्द्रमसो वा स्फुटप्रकाशाभावेपि चक्षुषा अविशेषतः सर्वैः ग्रहणात् अस्ति सत्त्वम्; न तद्वद् आत्मनः केनचित् सत्त्वमनुभूयते, इत्याशंक्य; सुषुप्तौ आत्मनोपि अविशेषतो भानं साधयति— प्रागस्वाप्समित्यादिना । यः सुषुप्तिकालीनात्मा । प्रबोधसमये सुप्तेरुत्थान-समये । प्रत्यभिज्ञायते । कथम् ? प्राक् योहं अस्वाप्सम् स इदानीं जागर्मि इति । न च तदाननुभूतस्य प्रत्यभिज्ञानं सम्भवति, अन्यत्र देवदत्तादननुभूते प्रत्यभिज्ञानाऽदर्शनात् । न च तदा करणेन आत्मानुभवः, इन्द्रियादिकरणानां सुषुप्तावभावात् । अतः स्वप्रकाशस्य आत्मनः सत्वान्न तदा शून्यत्वम् । नापि तस्य क्षणिकत्वम् । नापि जडत्वम् । उक्तयुक्तेरेव । 'सुषुप्तिकाले सकले विलीने तमोभिभूतः सुखरूपमेति । पुनश्च जन्मान्तरकर्मयोगात् स एवं जीवः स्वपिति प्रबुद्धः '॥ (कै० १.१५), 'सता सोम्य तदा सम्पन्नो भवति' (छा० ६ ८.१) इत्यादिश्रुतिश्चात्मनः सच्चिदानन्दरूपत्वेन सुषुप्ता-ववस्थानं दर्शयति । आत्मनः सुखरूपत्वं च उत्थितेन तेन अनुसन्धीयते 'सुखमहमस्वाप्सम्' इति । अतो न कोपि दोष इति भावः ॥६॥

> बाल्यादिष्वपि जाग्रदादिषु तथा सर्वास्ववस्थास्वपि
> व्यावृत्तास्वनुवर्तमानमहमित्यन्तः स्फुरन्तं सदा ।
> स्वात्मानं प्रकटीकरोति भजतां यो मुद्रया भद्रया
> तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥७॥

अत्रेयं 'तत्त्वसुधा' ।

इनानीं मुंजादिषीकामिव देहादिभ्यो विविच्य सच्चिदानन्दरूपं प्रत्यगात्मानं प्रदर्श्य, तस्य परमेश्वराऽभेदं श्रुतिगुर्वीश्वरप्रसादलभ्यं प्रदर्शयन्नाह—बाल्यादिष्विति । बाल्यादिषु; बाल्यं शैशवं तदादिषु शैशव-कौमारयौवनमध्यवयस्स्थाविररूपासु । जाग्रत्स्वप्नसुषुप्तिमूर्छाजन्मजरामरण-रूपासु । तथा अन्यासु अपि अवान्तरासु दर्शनश्रवणादिरूपासु कर्तृत्व-

भोक्तृत्वादिरूपासु च सर्वासु अवस्थासु दशासु व्यावृत्तासु परस्पर व्यावर्तमानासु अनुवर्तमानं अनुगततया सर्वास्ववस्थासु वर्तमानम् ।

अयं भावः । यो हि असत्यजडानानन्दरूपासु सर्वास्ववस्थासु व्यावर्तमानासु योहं सुप्तो स्वप्नमद्राक्षं सोहमिदानीं जागर्मि इति अवस्थात्रये, योहं बालो युवा चाभूवम् सोहमिदानीं वृद्धोस्मि इति बाल्यादिष्वपि च सत्त्वेन अनुवर्तमानः अनुभूयते, तथा द्रष्टृत्वेनाभिमतेषु चक्षुरादिषु व्यावर्तमानेषु स्वयं तत्सकलसाक्षित्वेन यः चिद्रूपः सदा अनुवर्तमानोऽनुभूयते, तथा प्रियत्वेनाभिमतवित्तपुत्रपिण्डादिषु व्यावर्तमानेषु च यः स्वयं सदा प्रतिविषयः सर्वशेषित्वेन निरतिशयप्रीतिविषयतया आनन्दरूपत्वेन अनुवर्तमानः अनुभूयते, तद्वदेव अहंबुद्धिविषयतया आत्मत्वेनाभिमतेषु देहादिभोक्त्रन्तेषु व्यावर्तमानेषु यश्च स्वयं अहं बुद्धिम व्यभिचरन् सदा आत्मत्वेनानुवर्तमानोनुभूयते, ततः सद्रूपत्वं, चिद्रूपत्वं, आनन्दरूपतया प्रियत्वं, अहम्बुद्धिविषयतया प्रत्यक्त्वं च यः कदापि न व्यभिचरति स एव त्वंपदलक्ष्यार्थं आत्मा, इति । तथा च तापनीय श्रुतिः, 'तं वा एतमात्मानं जाग्रति अस्वप्नमसुषुप्तं, स्वप्ने अजाग्रतं असुषुप्तं, सुषुप्ते अजाग्रतमस्वप्नं, तुरीये अजाग्रतमस्वप्नमसुषुप्तं, अव्यभिचारिणं नित्यानन्दसदेकरसं ह्येव चक्षुषो द्रष्टा, श्रोत्रस्य द्रष्टा, वाचो द्रष्टा' इति (नृ० ३.२) ।

एतदेवाह—अहमित्यन्तः स्फुरन्तं सदेति । अन्तः शरीरादिषु मध्ये । अहमिति अहम्बुद्धिविषयत्वेन । सदा सर्वेष्वपि कालेषु । स्फुरन्तं भासमानं, उपलक्षणमेतत् सत्त्वेन प्रियत्वेन च सदा स्फुरन्तमित्यपि द्रष्टव्यम् । एवम्भूत प्रत्यगात्मानं यः परमेश्वरः स्वात्मानं एव स्वं, 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै० २.१), 'विज्ञानमानन्दं ब्रह्म' (बृ० ३.९.२८) इत्यादिषु श्रुतिषु सच्चिदानन्दात्मकत्वेन त्रिविधपरिच्छेदशून्यतया च प्रसिद्धः परमेश्वर एवं आत्मा स्वरूपं यस्य प्रत्यगात्मनः, न तु कर्त्रादिरूपेण प्रतीयमानः आत्मा सः स्वात्मा प्रत्यगात्मा, तं स्वात्मानम्, ब्रह्माभिन्नमिति यावत् । भद्रया शोभनया मुद्रया करकलितज्ञानमुद्रया । भजतां स्वभक्तानां प्रकटीकरोति तेषां प्रत्यगात्मनं ब्रह्मस्वरूपत्वेन अप्रकटं प्रकटं करोति स्फोरयति । तस्मै नमः ।

बाल्यादिषु तथा जाग्रदादिषु अपि सर्वासु अवस्थासु व्यावर्तमानासु अनुवर्तमानं सदा अन्तः अहमिति स्फुरन्तं भजतां प्रत्यगात्मानं यो भद्रया मुद्रया स्वात्मानं प्रकटीकरोति तस्मै नम इत्यन्वयः ॥७॥

विश्वं पश्यति कार्यकारणतया स्वस्वामिसम्बन्धतः
शिष्याचार्यतया तथैव पितृपुत्राद्यात्मना भेदतः ।
स्वप्ने जाग्रति वा य एष पुरुषो मायापरिभ्रामितः
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥८॥

अत्रेयं 'तत्त्वसुधा' ।

ननु ब्रह्मव्यतिरिक्तं चेत्किमपि न वस्त्वस्ति, तर्हि कथं परमार्थोपदेशादिव्यवहारः ? न हि जातु कश्चित्तत्र बद्धोऽस्ति येन बन्धनिवृत्तये विद्योपदेशः स्यात्, बन्धहेतोः कस्याप्यभावात् । नापि विद्यावतो मुक्तिः सम्भवति, तद्धेतुगुरुशास्त्रादीनां अभावात्, इत्याशंक्य; अनाद्यनिर्वचनीयपरमात्माध्यस्तमायावशादेव सर्वो व्यवहारः ब्रह्मसाक्षात्कारपर्यन्तं घटते, इत्यभिप्रेत्याह— विश्वं पश्यतीति । पुरुषः पूर्णः । यः श्रुत्यन्तप्रसिद्धः परमेश्वरः । मायापरिभ्रामितः स्वोपाधिभूतमायया मलिनसत्त्वप्रधानया कार्यकारणसंघाताकारेण परिणतया स्वेन प्रविष्टया, परिभ्रामितः बहुविधं भ्रमं प्रापितः । एषः सर्वप्राण्यपरोक्षजीवः सन् सांसारित्वेन भावितः । विश्वं जगत् । भेदतः बहुभेदभिन्नतया । भ्रमेण पश्यति अवलोकयति । भेदमेव दर्शयति—कार्यकारणतयेत्यादिना ।

अयमर्थः । यद्यपि परमार्थतो ब्रह्मव्यतिरिक्तं किमपि नास्त्येव, 'नेह नानास्ति किंचन' इत्यादिना श्रुत्या (बृ० ४.४.२०) निषेधात्, तथापि अनाद्यनिर्वाच्याविद्यावशात् मुधैव भ्रान्तो जीवः प्रपंचं बहुभेदभिन्नं पश्यति; निद्रापरवश इवानेकविधं स्वप्नम् । तस्य च वस्तुतो ब्रह्मैव सन्तमात्मानं निखिलानर्थसंकुलया मायया भ्राम्यतः स्वभ्रान्तिसिद्धगुरुशास्त्रन्यायादिभ्यो विद्योत्पत्तौ अविद्या सवासना निवर्तते, निद्राणस्य इव स्वाप्नव्याघ्रदर्शन-

समुपजातभयेन प्रबुद्धस्य स्वप्नः। ततः संसारान्मुक्तः स्वस्वरूपे सच्चिदानन्दात्मनि निरतिशयमहत्त्वसम्पन्न एव रममाणोऽवतिष्ठते। तदुक्तं सर्वज्ञात्ममुनिभिः, 'तस्माद् ब्रह्माऽविद्यया जीवभावं प्राप्य स्थित्वा[1] तावके तु स्वरूपे। त्वच्चित्तेन[2] स्पन्दितं विश्वजातं आकाशादिक्ष्मावसानं च पश्येः॥ स्वीयाविद्याकल्पिताचार्यवेद—न्यायादिभ्यो जायते तस्य विद्या। विद्याजन्मध्वस्तमोहस्य तस्य स्वीये रूपेऽवस्थितिः स्वप्रकाशे'॥ (सं० शा० २.१६२-३) इति[3]। ततः सर्वस्य परमार्थतो ब्रह्ममात्रत्वेपि मायावशाद् भ्रान्त्या सर्वमुपपद्यत इति।

कार्यं जन्यम्। कारणं जनकम्। स्वं गृहक्षेत्रादि। स्वामी तद्वान् देवदत्तादिः। शिष्यः विद्याग्रहणार्थं विधिवद्गुरुमुपसन्नः। आचार्यः विद्योपदेष्टा। पिता निषेक्ता। पुत्रः तच्छुक्लसम्भवः। इत्यादिरूपेण विश्वं यः पश्यति तस्मै नम इति सम्बन्धः।

---

१. 'प्राप्यासित्वा' इति सर्वज्ञातमीयपाठः।

२. चित्तशब्देनाविद्योच्यते। एवं च त्वदविद्योत्थविकल्पितमित्यर्थः।

३. अत्र मधुसूदनपादाः—"उक्त पुरस्तादेकाऽज्ञानप्रतिबिम्बजीवैकत्वेपि तत्कार्यानन्तान्तःकरणावच्छिन्नस्य तस्य अनन्तप्रमात्रादिभाव इति। तत्र यदन्तःकरणावच्छिन्ने श्रवणमननादिसम्पत्त्या निश्चयरुपापि ब्रह्मविद्याऽपरोक्षा भवति,स गुरुः। अतएवानन्तान्तःकरणावच्छिन्नानां युगपत्स्वस्वगुरोः विद्याप्तये पृथग् यत्न उपपद्यते। न चैतावता जीवभेद आयाति। अविद्याप्रतिबिम्बस्यैकस्यैव जीवस्य तत्तदुपाधिना युगपत्क्रमेण वा तदुद्देशेन प्रवृत्तेः सम्भवात्।" रामतीर्थश्च— "व्यावहारिक प्रमाणाभिमतेनैव ज्ञानेन सर्वविकल्पाधिष्ठानं ब्रह्मैव ब्रह्मवित्तया कल्पितमाचार्यः, वेदाद्यात्मना च कल्पितं प्रमाणादिरपि, यथा अज्ञत्वेन परिकल्पितं ब्रह्मैव शिष्यः। तस्माद्यथा शिष्यः स्वाविद्याकल्पितमाचार्यं द्वैतं च पश्यति तथा चाचार्योपि ब्रह्मविद्यानाधितया प्रारब्धकर्मशेषवशादनुवर्तमानया स्वविद्यया शिष्यमन्यच्च पश्यति।"

भूरम्भांस्यनलोऽनिलोऽम्बरमहर्नाथो हिमांशुः पुमान्
इत्याभाति चराचरात्मकमिदं यस्यैव मूर्त्यष्टकम् ।
नान्यत्किंचन विद्यते विमृशतां यस्मात्परस्माद्विभोः
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥९॥

अत्रेयं 'तत्त्वसुधा' ।

इदानीमुक्तरूपब्रह्मापरोक्षज्ञाने मन्दाधिकारिणां अष्टमूर्त्युपासनं क्रम-मुक्तिदायकं, उत्तमाधिकारिणां श्रोतव्यादिश्रुतिसिद्धवेदान्ततद्विषयब्रह्मविचारः साधनम्, इत्यभिप्रेत्याह—भूरम्भांसीति । भूः पृथिवी । अम्भांसि जलानि । अनलः अग्निः । अनिलः वायुः । अम्बरं आकाशः । अहर्नाथः सूर्यः । हिमांशुः चन्द्रः । पुमान् सकलकर्मविद्याधिकारी जीवः । इति एवंप्रकारेण । यस्यैव परमेश्वरस्य सर्वज्ञस्य सर्वशक्तेः सच्चिदानन्दाद्वयस्य सदाशिवस्यैव । मूर्त्यष्टकं मूर्तीनां विग्रहभूतानां अष्टकम् । आभाति आ समन्ताद् भाति ।

अयमर्थः । उपासकः स्वदेहे वर्तमानपंचभूतानि व्यष्टिभूतानि समष्टि-भूतैः, प्राणापानौ च सूर्यशशांकाभ्यामेकीकृत्य, पंचभूतात्मकशरीराभिमानिनं स्वात्मानं अष्ट[म]मूर्ति परमेश्वरेणैकीकृत्य, सकलव्यापी अष्टमूर्त्यात्मकः सदाशिवोस्मि इति चिन्तयेत् ततो भावनातिशयेन तत्सायुज्यं प्राप्य सर्वैश्वर्यसम्पन्नः अन्ते तत्प्रसादासादिततत्त्वज्ञानेन तत्त्वसाक्षात्कारेण विमुच्यते, इति ।

विमृशतां तत्त्वं विधिवद् गुरुश्रुतिभ्यो युक्त्या च अनिशं विचारयतां पुरुषाणाम् । परस्मात् सर्वकारणात् । विभोः विविधप्रपंचात्मना, भवतः विवर्तमानात् । यस्मात् सर्वाधिष्ठानात् सच्चिदानन्दात्मकात् परमेश्वरात् । अन्यत् पृथक् । किंचन किंचिदपि । न विद्यते न भवति, सर्वस्य तस्मिन् परमेश्वरे अध्यस्तत्वेन तन्मात्रत्वात् । तथा चोक्तं महिम्नस्तवे—'त्वमर्कस्त्वं सोमस्त्वमसि पवनस्त्वं हुतवहस्त्वमापस्त्वं व्योम त्वमु धरणि रात्मा त्वमिति च । परिच्छिन्नामेवं त्वयि परिणतां बिभ्रति गिरं न विद्मस्तत्तत्त्वं वयमिह तु यत्त्वं न भवसि ॥' इति (२७) । श्रुतिश्च 'विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत् । सर्वो ह्येष रुद्रः तस्मै रुद्राय नमो अस्तु ॥ यस्मात्परं

नापरमस्ति किंचिद्यस्मान्नाणीयो न ज्यायोस्ति कश्चित् । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकः तेनेदं पूर्णं पुरुषेण सर्वम् ॥" इत्याद्या (तै०उ० ४.२४,१२)। स्तब्धः निश्चलः । दिवि स्वप्रकाशे स्वरूपे । तथा च उक्तरूप ब्रह्मात्मज्ञानात् उत्तमाधिकारिणामिहैव सच्चिदानन्दाद्वयपरशिवरूपेणावस्थानलक्षणा मुक्तिः ,आसाद्यते, 'अत्र ब्रह्मसमश्नुते' इत्यादिश्रुतेः (कठ० ६.१४) इति भावः। तस्मै ज्ञानोपदेष्ट्रे गुरुरूपाय दक्षिणामूर्तये परमेश्वराय नमोऽस्तु इति ॥९॥

सर्वात्मत्वमिति स्फुटीकृतमिदं यस्मादमुष्मिन् स्तवे
तेनास्य श्रवणात् तथाऽर्थमननाद् ध्यानाच्च संकीर्तनात् ।
सर्वात्मत्वमहाविभूतिसहितं स्यादीश्वरत्वं स्वतः
सिद्ध्येत् तत् पुनरष्टधापरिणतं चैश्वर्यमव्याहृतम् ॥१०॥

अत्रेयं 'तत्त्वसुधा' ।

इदानीमेतत्स्तोत्रपाठादौ प्रवृत्तानां पुरुषधौरेयाणां अवश्यंभावि फलं कीर्तयन् स्तोत्रमुपसंहरति—सर्वात्मत्वमिति । इति उक्तप्रकारेण । अमुष्मिन् स्तवे अस्मिन् स्तोत्रे । इदं श्रुतिषु 'इदं सर्वं यदयमात्मा' इत्यादिषु (बृ० ४.५.७) श्रूयमाणम् । सर्वात्मत्वं प्रत्यगात्मनः स्वरूपत्वम् । स्फुटीकृतं स्फुटमावेदितम् । यस्मात् तेन अस्य स्तोत्रस्य । श्रवणात् गुरुतो विधिवत् श्रवणात् । तदर्थमननात्[1] श्रुतस्य अर्थस्य युक्तिभिरनुचिन्तनात् । ध्यानात् श्रवणमननाभ्यां निर्णीतस्य तथैव सोहं सर्वात्मा परमेश्वरोस्मीति विजातीय प्रत्ययतिरस्कारेण सजातीयप्रत्ययैकविषयीकरणात् । संकीर्तनात् सम्यक् परेभ्यः कथनाच्च । सर्वात्मत्वमहाविभूतिसहितं सर्वात्मत्वमेव महाविभूतिः महती सिद्धिः अणिमाद्यपेक्षया, तस्य त्रिविधपरिच्छेदशून्यत्वात् तया सहितम् युक्तम् । ईश्वरत्वं सत्यज्ञानानन्दलक्षणपरमेश्वरत्वम् । तत् श्रुतिप्रसिद्धम् ।

---

१. रामतीर्थीये तु तथेत्येव पाठः ।

स्वतः एव नित्यं विद्यमानम् । स्यात् भवेत्. अधुना ज्ञायत इत्यर्थः । पुनः भूयः । अष्टधा अष्टप्रकारेण । परिणतं मायापरिणामरूपम् । ऐश्वर्यं च अणिमादिकम् । अव्याहृतं क्वचिदपि अप्रतिहतम् । सिद्धयेत् 'स एकधा भवति त्रिधा भवति' (छा० ७.२६), 'स यदि पितृलोककामो भवति संकल्पादेव पितरः समुपतिष्ठन्ते' (छा० ८.२.१) इत्यादिश्रुत्युक्तं सर्वं भवेदित्यर्थः ॥१०॥

एवमेषा कृता व्याख्या दक्षिणाशामुखस्तुतेः ।
यथामति तया तुष्टो दक्षिणामूर्तिरस्तु नः ॥

—o—

समाप्ता 'तत्त्वसुधा'

# श्लोकानुक्रमणिका

## अ



## आ



## इ

त



द



ध



न

## प

### ब



### भ

## म



## य

## र



## ल



## व



## श

## ष



## स

# पूर्व-पीठिका

———:०:———

ॐ

नमस्तेभ्योपि मे सोमकलाकलितशेखरम् ।
नायं स्वप्नेपि पश्यन्ति निर्मलानन्ददायिनम् ।।

मानव हृदय में प्रकृति के अन्तस्तल में निहित रहस्य को समझने की नैसर्गिक अभिलाषा रहती है। मानव दो प्रकृतियों को भिन्नरूप से अनुभव करता है। बाह्यजगत् और आन्तरजगत् या मन और द्रव्य ही वेदों में परा और अपरा प्रकृति कहे गये हैं। अपनी रुचि, योग्यता और संस्कारों के प्रभाव से जगत की असीमता में प्रवेश मनुष्यमात्र करता है। मशक और बाज दोनों ही आकाश में उड़ते हैं। मूर्ख और ज्ञानी दोनों ही अनादिकाल से दृश्य को अदृश्य के द्वारा समझने का प्रयत्न करते रहे हैं, पर सत्य सर्वदा वाणी का अविषय ही बना रहा है।

बाह्यजगत् के अन्वेषणों को विज्ञान और मानस जगत् के अन्वेषणों को दर्शन नाम से कहा जाता है। अर्वाचीन काल में युरोपीय संस्कृति ने विज्ञान में अभूतपूर्व प्रगति की है। भारत, जो प्राचीन काल में आन्तर जगत् के अन्वेषणों का केन्द्र रहा है, अनेक कारणों से दर्शन में ऐसी नवीन दिशा दिखाने में अभी समर्थ नहीं हो पाया है। तथापि विज्ञजनों की मान्यता है कि प्राचीन युगों की सैद्धान्तिक प्रगति सम्यग्रूप से समझ लेने पर अभी भी मार्ग दर्शन के लिये पर्याप्त है।

वस्तुतः परा और अपरा प्रकृतियों के अतीत जो तत्व है वही वेदों की हमें एक आध्यात्मिक देन है। यह तत्व विज्ञान और दर्शन दोनों से परे है। दोनों प्रकृतियां इस में समन्वित हैं। यही वह आधार है जो हमें दोनों की ही परीक्षा करने की सामर्थ्य देता है। सृष्टि इसी

केन्द्र से स्पन्दित होकर पुनः इसी में लय होती है । इसी को सदाशिव-तत्त्व कहा जाता है । प्रकृति के पर्दे को खोलने पर ही हम इसको जान पाते हैं, तथापि पर्दे में से भी विज्ञों को केवल उसी का प्रकाश प्रतीत होता है । अवगुण्ठन को तो सौन्दर्य की आकर्षण वृद्धि का प्रसाधन सहृदय स्वीकार करते हैं ।

आज विज्ञान और दर्शन का द्वन्द्व केवल भौतिक न रह कर धार्मिक जीवन में उतर आया है । धर्म दर्शन का साथी रहा है । विशेषतः भारत में तो प्रत्येक धर्म दर्शन पर ही स्थापित होता है । विज्ञान ने दर्शन को चुनौती ही नहीं पराजित भी कर दिया है । आज का दार्शनिक या तो वैज्ञानिक रहस्यों का मानस टीकाकार रह गया है, या संकुचित होकर दार्शनिक इतिहासकार मात्र बन चुका है । विज्ञान के विकास-वाद, सापेक्षवाद आदि का अयौक्तिक घटन प्रथम पक्ष में पुष्ट प्रमाण है एवं द्वितीय पक्ष में तो प्रायः भारत के सभी दार्शनिक आ जाते हैं । मौलिक दार्शनिक विचारों का अभाव ही इस युग में विज्ञान के उत्कर्ष का प्रतीक है । अनिच्छापूर्वक भी हमें स्वीकार करना ही पड़ेगा कि धर्म आज हमारे जीवन को स्पन्दित नहीं करता । वह या तो अपठित जनसामान्य में भय और लोभ से जीवित है, या एक अजीब खिलोने की तरह जीवन गृह का शृंगार । धर्म मरणोन्मुखी है । प्रश्न है क्या दर्शन उसकी मदद कर सकेगा ?

आज के युग की आवश्यकता धर्म के रूप को समझने की है क्या धर्म दार्शनिकों की ईश्वर सम्बन्धी मान्यताओं पर अवलम्बित है अथवा जन्मान्तर की अज्ञेय स्थिति के भय का ही उसे सहारा है ? अथवा उसका कोई मौलिक आधार है ? यदि पूर्व दो विकल्प सत्य हों, और संसार के सभी तथाकथित धर्म इन्हीं पर आधारित हैं, तो धर्म को बचाना न केवल व्यर्थ है पर असम्भव भी ।

वेद हमें एक नवीन मार्ग बतलाता है । भारत में आज से प्रायः १५०० वर्ष पूर्व यही स्थिति आई थी । बौद्ध दर्शन एवं धर्म ने हमें एक करारी हार दी थी । और एक सहस्र वर्ष पर्यन्त हमने अपनी

मान्यताओं की परीक्षा की। संसार के इतिहास में प्रथम बार धर्म की आधार शिला स्वयं धर्म बना। धर्म को दर्शन, मानस जगत्, विज्ञान, अन्धविश्वास एवं पारलौकिक भीति आदि सभी से विश्लिष्ट कर के अपने रूप से समझा गया। निःसन्देह वेद की अपौरुषेयता का सिद्धान्त इसी आधार पर सिद्ध है। वेद में धर्म को इसी दिक्कालातीत रूप से प्रतिपादित किया गया है। यहाँ हमें धर्म शब्द से आध्यात्मिक सिद्धान्त समझना चाहिये। माण्डूक्यकारिकाभाष्य में 'धर्मान् आत्मनः' कह कर आचार्य इसी का निर्देश करते हैं।

यद्यपि भारत में सभी ने उस समय विचार-सरणि निर्माण के द्वारा इस विश्लेषण में भाग लिया था, तथापि भगवान शंकर परावतार आचार्य भगवत्पाद को ही इसके रहस्योद्घाटन का श्रेय है। गौतम, कणाद, प्रशस्तपाद, आसुरि, पंचशिख, कपिल, बादरायण आदि के नाम और ग्रन्थ विश्वविख्यात हैं। पर वे जिस तत्त्व को प्रकट करने का प्रयत्न असफलरूप से कर रहे थे उसे आचार्य ने करामलकवत् सब को सुलभ कर दिया। धर्म के इस रूप पर ही आश्रित हो कर हम ने न केवल सभी वैदिक सम्प्रदायों का समन्वय किया वरन् बौद्ध जैसे नास्तिकों को भी आत्मसात् कर लिया। मध्यकाल में पुनः धर्म अनेक वादों से आक्रान्त हो गया। आज आवश्यकता है पुनः विशुद्ध धर्म को समझ कर विज्ञान और दर्शन दोनों को एक नवीन दिशा देने की। यदि भारत ने इसमें सफलता पाई तो वह भी विश्व में गुलाम न रह कर स्वतन्त्र बन पायगा। अन्यथा आज तो हम गेहूं और दूध से लेकर यन्त्र और शस्त्र, एवं दर्शन और विचार से लेकर भाषा और पोशाक तक में गुलाम बने हुए हैं। शासकों के चर्म का वर्ण परिवर्तन तो स्वतन्त्रता नहीं कहा जा सकता? और न केवल ग्रामीण नृत्यों का नाम संस्कृति ही है।

धर्म के विशुद्ध रूप को यद्यपि भाष्यकार शंकर ने प्रकट किया तथापि भाषा में सत्य के प्राकट्य में दिक्कालातीतता असंभव है। अतः हमारे आदर्श रूप से उन्होंने परमहंस सम्प्रदाय के आद्याचार्य

भगवान् दक्षिणामूर्ति को रखा। उनका व्याख्यान ही मौन है। इस तत्त्व को प्रकट करने के लिये ही इस स्तोत्र की रचना की गई है। वैदिक धर्म अनादि होने पर भी उसके सिद्धान्त का प्राकट्य दक्षिणामूर्ति के मौन व्याख्यान से सृष्टि के आदि काल में सनत्कुमारों को हुआ। एवं शंकर के ही प्रस्थानत्रय व्याख्यानों से वाणी में प्रकट हुआ। प्रस्थानत्रयी के अध्ययन में हमें सर्वदा इसका दर्शन होता है कि कहीं आचार्य धर्म के विशुद्ध रूप का वर्णन कर रहे हैं और कहीं व्यावहारिक रूप का। प्रथम ही आधार है, द्वितीय तो कार्यार्थ है। इसीलिये कहीं तो वे परमेश्वर को अविद्या के काल में ही मानते हैं और कहीं उसे ही ब्रह्मरूप मानते हैं। निर्गुण और सगुण ब्रह्म के ही दो रूप हैं।

शांकर विचार-सरणि उपनिषदों की भित्ति पर खड़ी थी। आगमों पर यद्यपि प्रपंचसार एवं सौन्दर्य लहरी में पर्याप्त प्रकाश डाला गया था पर उनका दार्शनिक विकास नहीं किया जा सका था। अतः शांकर शिष्य परम्परा के गृहस्थ शिष्यों ने इस ओर समधिक प्रयास किया। वसुगुप्त और सोमानन्द, जो काश्मीर में अद्वैतवाद के अप्रतिम प्रचारक थे, इसके प्रधान थे। अभिनवगुप्तपाद इसके सर्वोच्च शृंग थे यह निर्विवाद है। आचार्य विद्यारण्य ने जिस प्रकार पंचदशी से वैदिक परम्परा को सर्वसुलभ कर दिया, उसी प्रकार श्रीविद्यार्णव से आगम परम्परा को भी सरल बना दिया। उनकी सूतसंहिता की टीका तो दोनों के समन्वयात्मक रूप समझने में आदर्श ग्रन्थ है। यह स्मर्तव्य है कि आचार्य शंकर भगवत्पाद ने सूतसंहिता को १७ बार पढ़ने के बाद ही भाष्यों का निर्माण प्रारम्भ किया था। अतः शांकर परम्परा का मूल ग्रन्थ उसे स्वीकार करना ही पड़ेगा।

मध्यवर्ती काल में दक्षिण भारत में मीमांसा एवं उत्तर भारत में न्याय का प्राबल्य रहा। वैष्णव धर्म के प्रसार ने भक्ति को द्वैतपरक बना डाला और उसको इतना विकृत बना दिया कि वह वैदिक और आगम दोनों परम्पराओं से हट गई। इन सभी धाराओं का

प्रभाव अद्वैतवाद के प्रसार में पड़ा। वाचस्पति ने दार्शनिक क्षेत्र में जिस प्रकार अद्वैतवाद को अनुभव और साधन क्रम से विपरीत बना दिया वह तो विज्ञों को विदित ही है। कल्पतरुकार ने अतिसुन्दर रूप से उनका भेद बताते हुए कहा है 'स्वशक्त्या नटवद्ब्रह्म कारणं शंकरोऽब्रवीत्। जीवभ्रान्तिनिमित्तं हि बभाषे भामतीपतिः।' जो परम शिव का विलास या आभास था वही जीव का बन्धन या माया बन गई। अन्ततोगत्वा अज्ञान या माया को सृष्टि का उपादान कारण भी माना जाने लगा जो शांकर सिद्धान्त के अत्यन्त विरुद्ध था।

काश्मीर में इन सिद्धान्तों का प्रवेश न हो सका। अतः वहाँ आगमों का अद्वैतवाद परिशुद्ध रूप से वृद्धि को प्राप्त होता रहा। इसको प्रत्यभिज्ञा या त्रिक दर्शन कहते हैं। पाश्चात्य लेखकों के प्रान्तीयतावाद ने इसे काश्मीरी शैव-दर्शन का नाम दिया है। वस्तुतः यह अद्वैतवाद ही है।

वर्तमान ग्रन्थ भगवान् शंकरभगवत्पादाचार्य द्वारा निर्मित है एवं उनके साक्षात् शिष्य भगवान् सुरेश्वराचार्य द्वारा मानसोल्लास नामक वार्तिक से विभूषित है। अतएव इसके परिशुद्धसिद्धान्तरूपता में मतभेद असम्भव है। वर्तमान अनेक ग्रन्थों में जो कमियाँ हैं वे इसमें नहीं हैं यह हमने व्याख्या में दिखाने का प्रयत्न किया है। कई लोग इसे प्रत्यभिज्ञा दर्शन का ग्रन्थ मानेंगे। परन्तु इस ग्रन्थ का निर्माण वेदान्त सूत्रों के अधिकरण क्रम से है। प्रत्यभिज्ञा दर्शन आगम और शिवसूत्रों पर आधारित है। सैद्धान्तिक एकता तो स्वतः सिद्ध है।

श्री गोपीनाथ कविराज के अन्वेषणों से यह निश्चित हो चुका है कि वेदान्त का प्राचीनतम रूप शिवाद्वयवाद या ईश्वराद्वयवाद ही था। शंकरभगवत्पाद का महान कार्य था उसमें से विशुद्ध धर्म को मथ कर निकालना अतः उन्होंने तत्त्व-मीमांसा आदि का सार्वभौम रूप ही आकर ग्रन्थों में रखा। न्याय या कापिल मान्यताओं को भी तत्तदभिमत रूप से अभ्युपगत कर लिया। परन्तु उनकी शिष्य परम्परा में साधन क्रम एवं आधारभूत धार्मिक व दार्शनिक मीमांसा में शिवाद्वयवाद की

प्रधानता बनी रही एवं प्रधान पीठों में आज तक अक्षुण्ण है। तथापि दार्शनिक पण्डितों ने इस से अनवगत होने के कारण इसका तिरस्कार कर के मनमानी प्रक्रियाओं का अनावश्यक बोझ वेदान्त पर डाला। आज आवश्यकता है कि हम इस बात को समझें। इस ग्रन्थ से यह स्पष्ट हो जाता है।

किंच वेदान्त दर्शन के साधन क्रम का आधार वैदिक कर्म आज नष्ट-प्राय है। प्राचीन परिपाटी से वर्णाश्रम धर्म भी उच्छिन्न-सा है। अतः आवश्यक है कि हम मानवमात्र सम्बन्धी साधन क्रम को प्रधानता दें। आगमों में ही हमें यह मार्ग दर्शन मिलता है। शैव धर्म अति प्राचीन काल से सार्वभौम धर्म रहा है। जाति, देश, काल, वर्ण, आश्रम, लिंग आदि सभी भेदों में भिन्न होता हुआ भी अभिन्न बना रहता है। व्रात्य और पंचमों को भी इस में स्थान है। 'चाण्डालानपि दीक्षयेत्' शैवागम का ही उद्घोष है। पर बौद्ध आदि की तरह यहाँ वेद और वर्णाश्रम का विरोध नहीं वरन् सभी को यथा योग्य स्थान दिया गया है और एक समन्वय उपस्थित है। शंकरभगवत्पाद ने ब्रह्मसूत्रों में ज्ञान में सर्वाधिकार स्वीकार करके आश्रमाधिकरण एवं विधुराधिकरण में जो व्यवस्थित विकल्प किया है वह शैवागमों की ही दृष्टि है। बुद्ध के जन्म के कई सहस्रों वर्ष पूर्व से यह विश्वभर में फैल चुका था। कोरिया व मंगोलिया, चीन व जापान, रूस व मिश्र, रोम व यूनान, अमेरिका व अफ्रीका, इण्डोनेशिया व आस्ट्रेलिया सर्वत्र शैव धर्म के ध्वंसावशेष पुरावेत्ता प्राप्त कर चुके हैं। आज हमें पुनः वैदिक धर्म के इस सार्वभौम रूप के प्रचार से विश्वभर में नव आलोक देना ही पड़ेगा। इस स्तोत्र में अत्यन्त संक्षेप से इसके स्वरूप पर प्रकाश डाला गया है।

इस परम्परा का सम्बन्ध विशेषतः श्री दक्षिणामूर्ति सम्प्रदाय से रहा है। गुरु परम्परा में स्वयं भाष्यकार श्री दक्षिणामूर्ति पीठ पर आरूढ़ रहे हैं एवं उन्हें मुखरदक्षिणामूर्ति ही माना जाता है। इस पीठ की प्रधानता समन्वय दृष्टि रही है। आगम व निगम दोनों के समन्वय

से ही भाष्यकार सर्वज्ञ और जगद्गुरु कहे जाते हैं। हमें इस स्थल पर एतद्विषयक अधिक विचार करना इष्ट नहीं। इसके विद्यापरम्परा की विशेषताओं का निदर्शन एक स्वतंत्र ग्रन्थ का विषय है।

यद्यपि इस ग्रन्थ पर अनेक टीकायें हुई हैं पर उनमें प्राय: त्रिकदर्शन के अज्ञान से खींचतान के अर्थ किये गये हैं। हमारे ही पीठ के अनन्त श्री महामण्डलेश्वर स्वामी अमरेश्वरानन्द जी ने इस पर सरल हिन्दी में वृत्ति लिखी थी। पर वह अब सर्वथा दुर्लभ है एवं उसकी शैली अर्वाचीन लोगों के लिये अनुपयुक्त है। फिर भी ७० वर्ष पूर्व अहमदाबाद से प्रकाशित यह वृत्ति विज्ञों को अवश्य देखनी चाहिये। आंग्ल भाषा में महादेव शास्त्री और गुर्जर भाषा में प्रतापराय देसाई के द्वारा यह ग्रन्थ प्रकाशित हुआ है।

हमारा विचार इस ग्रन्थ पर विस्तृत भाष्य लिखने का है परन्तु वर्तमान संस्करण में केवल मूल ग्रन्थ के शब्दार्थ मात्र बताने का उद्देश्य रखा है। स्वभावत: व्याख्या अति संक्षिप्त और दृष्टि से परिचय मात्र कराने में गतार्थ है। सहृदय मूल के भावों को हृदयंगम करेंगे, क्योंकि मूल को समझे विना विस्तृत भाष्य अनुपादेय ही सिद्ध होगा।

नव वैदिक धर्म (Neo-Hinduism) के संस्थापक रूप से इस ग्रन्थ के मूल लेखक आचार्य शंकरभगवत्पाद का जीवन सारे संसार में सुपरिचित है। प्राय: १५०० वर्ष पूर्व सुदूर केरल में जन्म लेकर समग्र भारत में केवल विचार बल से बौद्ध धर्म का समूल नाश करके पुन: वेदसिद्धांत की स्थापना ही नहीं वरन् सर्वदा इसके संरक्षणार्थ दशनाम संन्यास संघ की स्थापना भी की। भाष्य आदि ग्रन्थों से वेद का युक्तिसिद्ध वर्णन प्रस्तुत किया। केवल ३२ वर्ष की वय में कैलास गमन किया।

मानसोल्लास के लेखक ने उत्तर भारत के मिश्र कुल में जन्म लेकर साक्षात् शंकरभगवत्पाद से श्रीपरमहंसदीक्षा ली एवं सुरेश्वराचार्य नाम

प्राप्त किया । बृहदारण्यक पर आपका वार्तिक वेदान्त शास्त्र में 'वार्तिकान्ता ब्रह्मविद्या' कह कर सम्मानित किया जाता है। इनका मीमांसा और न्याय का अध्ययन अपूर्व था एवं युक्तिवाद में (Polemics) इन्होंने नई परम्परा चलाई जो श्रीपरमहंस चित्सुखाचार्य के समय तक पल्लवित होती रही । आप वार्तिककार कहे जाते हैं । इस ग्रन्थरत्न में आपने समग्र वैदिक सिद्धान्त का जो रहस्योद्घाटन किया है वह अपूर्व है यह विज्ञ पाठक स्वयं देखेंगे ।

**शिवाद्वयवाद और शाङ्कराद्वैतवाद**

मूल ग्रन्थ को सम्यग्रूपेण समझने के लिये हमें इन दोनों धाराओ पर दृष्टिपात करना पड़ेगा । विषय क्रम से ही हम विचार प्रवृत्ति करेंगे ।

संसार के सभी व्यवहारों में ज्ञान और क्रिया से अतिरिक्त पदार्थ की उपलब्धि नहीं है। आभ्यंतर व्यवहार ज्ञान प्रधान हैं परन्तु प्रधानत: क्रियामूलक हैं । बाह्य व्यवहार इसके विपरीत ज्ञानमूलक एवं क्रियात्मक प्रधानत: हैं । ब्रह्मसूत्र वेदों के ज्ञानकाण्ड या आध्यात्मिक अंशों का विचार है और धर्मसूत्र कर्मकाण्ड या आधिभौतिक और आधिदैविक अंशों के विचार में गतार्थ है । ब्रह्मसूत्रकार के ही पट्टशिष्य धर्मसूत्रकार हैं, अत: दोनों का सिद्धान्तभेद तो परवर्ती मतवाद का फल ही मानना पड़ता है । वेद में तात्पर्य भेद का प्रतिपादन तो विषयभेद से स्वाभाविक है । परन्तु दोनों ही सूत्रों में उपासना का विचार आता है । कर्मगत उपासना ही चित्तैकाग्र्य के द्वारा ज्ञानान्त:-पाती उपासना बन जाती है। इस उपासना के मूल में ज्ञान और क्रिया के भी आधाररूप से रहने वाली इच्छाशक्ति है । ज्ञान सर्वथा वस्तु के अधीन है और क्रिया का स्वरूप कर्ता के अधीन है । इच्छा ही वह स्वातन्त्र्य शक्ति है जो क्रिया को यह विलक्षणता देती है । इच्छा ज्ञान के बिना संभव नहीं । अत: ज्ञान और क्रिया की संयोजिका ही इच्छा है। श्रद्धा इच्छाशक्ति का सत्त्वगुण के उत्कर्षकाल का रूप है। इसीलिये श्रद्धारहित क्रिया निष्फल मानी जाती है ।

वेद ने इस इच्छाशक्ति को ही जगत् का कारण माना है। 'सोऽकामयत' (बृ० १.२.४) 'स ईक्षत' (ऐत० १.१.१), 'स ईक्षाञ्चक्रे' (प्र० ६.३) 'तदैक्षत' (छा० ६.२.१) 'कामस्तदग्रे समवर्तत' (ऋ० १०.१२.६४) आदि श्रुतियाँ इसमें प्रमाण हैं। स्वातन्त्र्य का विचार ही प्रत्यभिज्ञा दर्शन के मूल शिवसूत्रों की प्रधान देन है। परन्तु इसका मूल भगवान शंकरभगवत्पाद के ग्रन्थ ही हैं; इसका प्रबलतम-प्रमाण प्रत्यभिज्ञाहृदय का 'शाङ्करोप-निषत्सार-प्रत्यभिज्ञामहोदधेः। क्षेमेणोद्ध्रियते सारः संसारविषशान्तये ।।' (पृ० १६) है। [शंकर की उपनिषद् के सार प्रत्यभिज्ञा समुद्र का भी सार संसार रूपी विष की शान्ति के लिये क्षेम द्वारा निकाला जाता है।] उपदेश-साहस्री के प्रारम्भ में उसे स्वयं भगवान ही उपनिषद् कहते हैं। (पृ० १३७) अन्य कोई शांकरोपनिषद् कहीं भी प्रसिद्ध नहीं है। अतः प्रत्यभिज्ञा का मूल वहीं है।

इच्छा, ज्ञान और क्रियाएँ ही सभी दार्शनिक विचारों की अथ और इति है। इन तीनों का समन्वय ही अद्वैत है। इनमें से अन्यतम पर अधिक बल ही द्वैतदर्शनों का मूल है। हिन्दी के सर्वोच्च कवि जयशंकर 'प्रसाद', जो अर्वाचीन काल में शिवाद्वयवाद के प्रबल समर्थक रहे हैं 'इच्छा, क्रिया, ज्ञान मिल लय थे। दिव्य अनाहत पर निनाद में श्रद्धायुत मनु बस तन्मय थे।' (कामायनी पृ० १८६) कह कर इसका ही प्रतिपादन करते हैं।

ये तीनों शक्तियाँ किसी शक्तिमान् के ही आश्रित रह सकती हैं। और तीनों का अन्योन्याश्रय आश्रय की एकता का साधक है। जो जानता है वही तद्विषयक इच्छा करता है और जिसमें इच्छा है वही पुनः क्रिया में प्रवृत्त होता है। अतः तीनों का आधार ही शिव नाम से कहा जाता है। वेदान्त में सभी वाद माया का अधिष्ठान ब्रह्म को ही स्वीकार करते हैं।

शक्तिशिवात्मक ही जगत् है। शक्ति और शिव का भेद स्वीकार करने पर द्वैत-स्वीकृति हो जाती है। शक्ति को असत् मानने पर भी

यह द्वैतापत्ति निवृत्त नहीं हो सकती। अतः अद्वैत में दोनों का अनिर्वचनीय सम्बन्ध स्वीकार किया जाता है। इसको 'न लोके चैत्रतच्छक्त्योर्जीवितं लिख्यते पृथक्' (पंचदशी २.५३) [संसार में चैत्र और उसकी शक्ति के पृथक् उल्लेख के अभाव से] आचार्य श्रीपरमहंस विद्यारण्य अनुभव सिद्ध बताते हैं। भिन्नता अनुपलब्धि से असिद्ध है और अभिन्नता सुषुप्ति या प्रलय में अमान्य है। उभयरूपता तो सर्वथा असंगत है। पारिशेष्यात् अनिर्वचनीयता ही स्वीकार्य है।

माया को मिथ्या भी उपर्युक्त दृष्टि से ही वेदान्तों में प्रतिपादित किया है। अत्यन्त असत् यदि मिथ्या का अर्थ होता तो बौद्धदर्शन की शाखा शांकर अद्वैत बन जाता। 'मिथ्याशब्दो द्व्यर्थोऽपह्नववचनोऽनिर्वचनीयतावचनश्च' (पंचपादिका) से आचार्य प्रवर पद्मपाद स्पष्ट ही मिथ्या को अनिर्वचनीयता का पर्याय बताते हैं। परवर्तीकाल में लौकिक मिथ्या शब्द से पारिभाषिक मिथ्या शब्द के भेद को विस्मृत कर वेदान्ती और वेदान्त के समालोचक दोनों ही भ्रान्ति में पड़े हैं। कार्यात्मक जगत् में अपह्नववाची होने पर भी कारणात्मक माया में तो सर्वदा अनिर्वचनीयतावाची ही मिथ्या शब्द है। इसीलिये भगवान् सुरेश्वराचार्य सम्बन्धवार्तिक (३७७-३९६) में प्रपंचविलयवादी का ऊहापोह से खण्डन करते हैं। विद्यारण्य तो अपह्नववादियों को पक्षाघात से पीडित भी कह देते हैं।

आधुनिक सम्प्रदायज्ञान से रहित पाण्डित्याभिमानी तो अनिर्वचनीयता का भी 'कह नहीं सकते' ऐसा अर्थ करके वक्तृगत दोष प्रतिपादन करते हैं। वेदान्त दर्शन में 'कहा नहीं जा सकता' [सदसद्भ्यां वैलक्षण्यम्] ऐसा अर्थ स्वीकृत होने से सम्बन्ध निर्वचन करने वाला वस्तु प्रतिपादक ही यह शब्द माना जाता है, वक्ता के ज्ञान सामर्थ्य का अभाव प्रतिपादक नहीं। इसे सन्देहवाद (agnosticism) कहना तो सर्वथा हास्यास्पद है। नवीन शब्दशास्त्र (Scmenticism) का अध्ययन संभवतः हमारे उच्छिष्ट भोजी आधुनिकों को अर्थ के अनर्थ करने से प्रतिमुख कर सके।

ठीक इन्हीं शब्दों में प्रत्यभिज्ञादर्शन भी माया के सम्बन्ध का निर्देश करता है। 'असती अपि सत्यवदाभासयन्ती मदीया शक्तिः' (सर्वतोभद्र पृ० १६५) [न हुई भी हुई की तरह प्रकाश करने वाली माहेश्वरी शक्ति] मिथ्या प्रतिपादक वाक्य ही स्वीकार करना पड़ेगा। इसी शक्ति से ब्रह्म जगत् विमर्श करता है। यही उसका स्वातन्त्र्य है। 'स्वेच्छया स्वभित्तौ विश्वमुन्मीलयति' (प्रत्यभिज्ञाहृदय. २) के अनुसार अभिन्ननिमित्तोपादान-कारणता ही अद्वैत में सर्वदा स्वीकृत है।[1] एवं यह मिथ्या माया के द्वार से ही संभव होने से प्रत्यभिज्ञा दर्शन को भी स्वीकृत है।

परवर्ती वेदान्त दर्शन में वाचस्पति मिश्र ने मण्डन के पृष्ठसेवी बनकर जो भाष्यसम्प्रदाय में मतद्वैध लाया उसी के फलस्वरूप प्रकाशानन्द ने स्वकृत वेदान्त सिद्धान्त मुक्तावली में सर्वंशः साङ्ख्यवाद का आश्रयण कर लिया। शिवाद्वय परम्परा के उल्लङ्घन का फल द्वैतवाद में पतन तो स्वाभाविक है।

ऐतिहासिकदृष्ट्या वेदान्त में पूर्व-पूर्व आचार्य पर-पर आचार्यों की अपेक्षा ब्रह्म की कारणता में माया का न्यून-न्यूनतर हस्तक्षेप स्वीकार करते हैं। सूत्रकार ने तो ज्ञेय ब्रह्म की प्रतिज्ञा के बाद उसका लक्षण ही जगत्कारण रूप से किया है। भगवान् भाष्यकार के प्रमुख सिद्धान्त अध्यासवाद का यही लक्षण आधार है। 'जन्माद्यस्य यतः' (ब्र० सू० १.१.१.२) के भाष्य में 'जन्म-स्थिति भंगयतः सर्वज्ञात् सर्वशक्तेः कारणाद्भवति तद्ब्रह्म' [जिस सर्वज्ञ सर्वशक्तिमान् कारण

---

१. तुलसीदास भी शिवाद्वय के प्रभाव से विनय-पत्रिका में 'केशव कहि न जाई' कह गये। परन्तु वैष्णव मत पर बौद्ध छाया का प्रमाण भी 'शून्य भित्ति पर' लिख कर दे गये। वैदिकों में तो ब्रह्म ही भित्ति है। द्र० योगवासिष्ठ में 'रेखोपरेखावलिता यथैका पीवरी शिला। तथा त्रैलोक्यखचितं ब्रह्मैव प्रविदृश्यताम् ॥' एवं चित्रदीप प्रकरण।

